*Tel: "Samskrutam"*

दूरध्वनिः - "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संपुटः १४ | 15th MAY 1976 | क्रमांकः ५

रामानुजार्यं दिव्याज्ञा वर्धतां मभिवर्धताम् ।

नळ वैशाखाङ्कः | शकाब्दाः १८९८ | मूल्यम् ०-५० पैसाः

# विषयसूचिका

★

# नलोऽहम्

— अवरः

नलोऽहं, नरोऽहम् ।
नरोऽहं, नलोऽहम् ॥

नलो वाऽस्तु कामं,
नरो वाऽतु कामम् ।
नरस्य नलस्य,
न नाम्नि प्रभेदः ॥

अभेदः कथं वा ?
प्रभेदे प्रवृत्ते –

अभेदः प्रभेदः,
सदा वर्तमानः ।
सदाऽऽवर्तमानः,
अनुवर्तमानः ॥

"सदेव सौम्य !
इदमग्र आसीत्" ॥

'तदेव सौम्य !
इदमित्थ मद्य ।
श्रुतिः काचिदत्र,
कृतिः काचिदत्र' ॥

# मताचार्याः

भारते प्रमुखतया द्वैत-मद्वैतंविशिष्टाद्वैतमिति मतत्रयं विराजते। एतत्त्रयन्तु भारत-देशसमुत्पन्नेषु प्राधान्येन विस्त रेण च वर्तते। क्रीस्तुमहम्म दादीयानि मतानि देशान्तरा-दागतानि। आस्तिक्यबुद्धिः, पारलौकिकबुद्धिश्च येषु मतेषु सन्ति तेषां पारस्परिकं वैरुध्यं प्रायशो न भवेत्। गम्यस्थानस्य प्राप्तये विविधानां मतानां सरणिस्तु पृथग्विधा भवतु नाम तावता नकाऽपि क्षतिः। एकं-सद्वस्तु विविधैरभिधीयते, यथा लौकिकवस्तूनां नामानि विविध-भाषासु भिन्नभिन्नतया वर्तते, तद्वत्।

श्रीमच्छंकराचार्यः रामानु-जाचार्यः, मध्वाचार्यश्च क्रमशः तत्तत्कालानुगुणतः अवैदिक-मतानां निरोधं कृत्वा स्वमत-प्रचार मकुर्वन् लोके भगव-द्भक्ति आस्तिक्यज्ञानं, पापभीतिं च प्रबोध्य जनान् परवस्तु-जिज्ञासू नकुर्वन्। एतेषां महाशयानां अवताराभावे, इदानींतनमानवाः कीदृशा वा भूयासु रित्यालोचनीयमिव। मानवस्य मानवता परिपोषण-द्वारा देवत्वप्राप्त्यै मार्गमुद्बोधित-वन्त स्ते महनीयाः तत्तन्मताव-लम्बिना मनुदिनं स्मरणीयाः। सर्वैः स्वमतधर्माचरणमेवाश्रय मनुष्ठेयम्। एकस्मिन् मते वर्तमानः, मनुजः, स्वमतं निष्फलमिति, परमतमात्मो-द्धारकमिति यदि मनुते, स सर्वात्मना अज्ञ इति प्रज्ञावता-माशयः। अत्यन्तकष्टस्थितावपि स्वमत मनभिमतं वा अभिमतं वा न तिरस्करणीयम्। अपि च सर्वेषामपि स्वमताभिमानः युक्त एव, किन्तु परमत-द्वेषः सर्वात्मना परित्याज्यः।

सर्वेष्वऽपि मतेषु सर्वैरपि ग्राह्या उत्तमांशाः अनेके वर्तन्त एवेति सिद्धान्तितमेव। एकस्मिन् मते विद्यमानानामेव मोक्षः नेतरेषामिति समुद्घोषणन्तु उन्मत्तप्रलपितमिव बुद्धिमद्भिः निरसनीयम्। सर्वेऽपि जनः प्रथमं स्वमतसंबन्धिप्राथमिकविषयान् अवश्यं ज्ञातुं यत्नं करोतु। ततः स्वाचार्यपुरुषै रुपदिष्टं मार्गं अनुसरतु। ततः परं परमतविषयानपि विमर्शयतु।

आचार्यत्रये शङ्कररामानुजयोर्जयन्तिः वैशाखशुद्धपञ्चम्यामभवत्। देशे अनेकत्र तत्तन्मतावलम्बिनः तत्तद्गुरुषु भक्तिं प्रादर्शयन्। तत्तदाचार्यपरम्परागता गुरवः इदानीन्तनकालिका अपि, तत्तन्मताभिरुचिप्रवर्धनाय, महान्तं प्रयत्नमाचरन्तीति यत् महानन्दास्पदं वर्तते। ते स्वामिनः ग्रामाद्ग्राममटन्तः स्वस्वमतस्थेभ्यः तत्तदाचारादिकं प्रबोधयन्ति। दैवभक्तिं विस्तारयन्ति। पुण्यपापादिकं, मोक्षं चोद्दिश्य च बोधयन्ति। तत्र तत्र भागवतसप्ताहादिकार्यक्रमप्रचालनद्वारा न केवलं भारतस्य अपि च निखिलजगतोऽपि क्षेमं वितन्वन्ति। तेषामाचार्याणां तपःप्रभावात् लोकस्य सौख्यं भवतीति पुराणप्रसिद्धमेव खलु।

अतो वयं नित्यमपि मताचार्येषु भक्तियुक्त्वा भवेम। तेषामुपदेशसुधां श्रवोञ्जलिभिः पिबेम। तदुदितमार्गमनुसरेम। तत इहपरसौख्यं लभेम। इति शम्।

# बालानां सुखबोधाय

भंडिगडि श्री चन्द्रशेखरभट्टः

माता —

माता रक्षति बालकं ह्यहिततस्सम्प्रीणयेन्मातरं,
मात्रा नश्यति सर्वदुःखमनीशं मात्रे विदध्यान्मुदम् ।
मातुर्नास्ति परं हि दैवमपरं मातुश्च सेवां चरेत्,
प्रीतिं मातरि सर्वदा न्यस सखे मातः सदा पालय ॥

पुत्रः —

पुत्रो नाशयते पुमाख्यनरकं पुत्रं गृही प्राप्नुयात्,
पुत्रेणात्र लभस्व सौख्यमचलं पुत्राय विद्यां दिशेत् ।
पुत्रात्स्वर्ग मवाप्यतेऽपि सुयशः पुत्रस्य रक्षां चरेत्,
पुत्रे सन्तु सुनिश्चलाः शुभगुणाः हे पुत्र धर्मं चर ॥

धर्मः —

धर्मो रक्षति धर्मिणं क्षितितले धर्मं चरे त्सर्वदा,
धर्मेणात्र हि लभ्यते च सुफलं स्पर्धेत धर्माय वै ।
धर्मात् क्षामभयं क्षितौ नहि भवेद्धर्मस्य रक्षा चरेत्,
धर्मे जाग्रति नास्ति तस्करभयं हे धर्म मामुद्धर ॥

पूण्यम् —

पुण्यं कर्म फलप्रदं भुवि नृणां पुण्यं च संपादयेत्,
पुण्येन स्वरवाप्यते हि मनुजैः पुण्याय धर्मं चरेत् ।
पुण्यात्कीर्तिरवाप्यते नरवरैः पुण्यस्य कार्यं चरेत्,
पुण्ये कर्मणि ह्विन्निवेशय सदा हे पुण्य मां जीवय ॥

श्रीमदाद्यजगद्गुरुशङ्कराचार्यजन्मदिनप्रीत्यर्थम्

# यतिसार्वभौमः

— या. वि. देवासकरः, बरोडा

सुन्दरे केरले देशे गेहे शिवगुरोस्तथा ।
जाताः श्रीशङ्कराचार्याः प्राज्ञा अद्भुतबुद्धयः ॥ १

स जातो येन जातेन नीतो धर्मः समुन्नतिम् ।
तज्जन्मना सुधन्यो हि ग्रामो यन्नाम "कालटी" ॥ २

विपश्चितां जनानां च शुभं सर्वं स्मयंकरम् ।
पश्य, व्यत्यासकार्येण कालटी "टीलका" भवेत् ॥ ३

मात्राज्ञां शिरसा धृत्वा प्रतस्थे शंकरो गृहात् ।
बाल्ये वयसि धर्मार्थं, सर्वदिक्षु, स शास्त्रविद् ॥ ४

माता उवाच: —

लोककल्याणकार्यार्थं त्यक्त्वा मामेकिलां कुले ।
यासि तात, हि स्तुत्यां तन्मां कदापि न विस्मर ॥ ५

आचार्याः ऊचुः —

मातृदेवि, ममाम्ब त्वां ब्रवीम्यवितथं वचः ।
आगमिष्यमि चाश्वेह यदा मां च स्मरिष्यसि ॥ ६

योऽदर्शयत्सत्यरूपं संसारस्य च दुस्तरम् ।
कृतो दिग्विजयस्तेन कीर्ति चापि दिशो दश ।
शङ्कराय नमस्तस्मै पूज्यपादाय सर्वदा ॥ ७

सा जराजर्जराम्बाऽन्ते सस्मार प्रियशङ्करम् ।
तदाऽऽगच्छत्स तत्राशु प्रापश्यन् मातरं प्रियाम् ॥ ८

प्रियपुत्रं हि दृष्ट्वा तं स्मरन् कृष्णं कलेबरम् ।
तत्याज स्वर्ययौ माता, शङ्करो दुःखितो भृशम् ॥ ९

स्वमातृमरणं वीक्ष्य दुःखितः शङ्करः किल ।
तदौर्ध्वदैहिकं चक्रे मातृदेवः स एकलः ॥ १०

प्राप्य प्रज्ञां च वैराग्यं वर्षे द्वाविंशत्तमे तथा ।
पञ्चत्वमगमत्प्राज्ञः शंकरो लोकशंकरः ॥ ११

बाल्ये वयसि तद्विद्या सश्चर्या च स्मयंकरा ।
आचार्यस्तत्समो विद्वान् न भूतो न भविष्यति ॥ १२

---

**दशावतारस्तोत्रम् —**

महायुद्धमध्ये धृतप्रग्रहः सन्,
स्वधर्माभिरक्तो समुत्साहयन्तम् ।
प्रभुं वासुदेवं भवन्तं प्रपद्ये,
प्रसीद प्रसीद प्रभो वेङ्कटेश ॥

गतमासगैर्वाण्यां प्रदत्तायाः समस्यायाः

# पूरणम्

अश्वत्थाम्नाऽतिक्रुद्धेन रात्र्यां पञ्चोपपाण्डवाः ।
अताता अनपत्याश्च मिथो विप्रेण वै हताः ।।

— के. सि. जयचन्द्रशास्त्री, चित्तूरु

विधिना प्राप्तपुत्रैस्तु लोकनिन्दास्त्विती रिताः ।
अताता अनपत्याश्च मिथो विप्रेण वै हताः ।।

— आर्. गोपाल्न्ः, चित्तूरु

पाञ्चालीनन्दनाः पञ्च प्रसुप्ताः प्राप्तयौवनाः ।
अताता अनपत्याश्च मिथो विप्रेण वै हताः ।।

— चलमचर्ल वेङ्कटरामानुजाचार्यः, जिल्लेल्लमूडी

धृतमिथ्याभिमानेन कुटुंबस्य नियोजने ।
अताता अनपत्याश्च मिथो विप्रेण वै हताः ।।

जयेशः, पुसद्

दासीपुत्रस्य नो तातः दासीलोलस्य नो सुतः ।
अताता अनपत्याश्च मिथो विप्रेण वै हताः ।।

— पि. एम्. पद्मनाभशर्मा, तञ्जावूर्

# वसंतवायुः

— जयेशः, पुसद्

उद्यानवीथै जनवृन्दकीर्णे
पद्मावकीर्णे जलपूर्णतीर्थे ।
सुगन्धपुष्पांकितरम्यकुञ्जे
वसंतवायुर्वहति प्रशान्तः ॥ १

इन्द्रपुरीये नवनीतिमार्गे
यन्त्रालये विंशतिसूत्रबद्धे ।
राष्ट्रध्वजे मानदशार्धरूढे
वसंतवायुर्वहति प्रसन्नः ॥ २

जटालशीर्षे नवयौवनानाम्
सुधौतवस्त्रे वपुषि प्रयुक्ते ।
वहित्रयाने युवकाधिरूढे
वसन्तवायु र्वहति प्रकामम् ॥ ३

नौकाविहारे जलयात्रिकानाम्
वातानुकूले भवने विशाले ।
प्रसन्नशय्यासदने सुरम्ये
वसन्तवायुः कुरुते विरामम् ॥ ४

स्नोलेपदीप्ते रमणीमुखाब्जे
कपोलयुग्मे विषयानुरक्ते ।
विलोलनेत्रे ललनाधरोष्ठे
वसन्तवायुः कुरुते विलासम् ॥ ५

# Samskritha Bhasha Pracharini Sabha

## CHITTOOR (A. P.)

RESULTS OF MARCH EXAMINATIONS, 1976

The following are the Register Numbers of successful Candidates who appeared for the Samskrit Examinations held on 6th, 7th and 8th March, 1976.

### PARICHAYA

I Class:— 12 24 34 69 70 86 92
94 97 113 233 34 360 62 66 561 62
606 to 10 31 to 35 37 47 to 51 63 65 68
707 11 40 43 to 45 47 50 to 54 56 to 58
60 66 68 69 93 to 96 814 985 91 1041
46 51 53 56 75 to 81 84 to 87 89 1139
40 42 5[illegible].

II Class:- 1 2 10 11 25 26 to 28 36
to 40 42 45 46 50 51 58 60 81
83 to 85 87 to 89 91 95 98 to 100 10 to 12
14 23 35 36 57 71 to 74 76 79 84
231 72 73 76 359 64 65 69 93 417
528 26 63 65 66 77 97 603 to 05 11
12 14 to 16 36 39 42 64 66 76 77
93 to 98 706 10 27 41 42 46
49 55 59 67 70 813 15 24 25 30

32A 71 77 78 909 32 42 47 to 49 51
52 86 90 92 1009 42 43 45 48 to 50
55 57 60 82 83 88 90 94 to 99 1103
06 07 09 10 38 44 46 67 68.

III Class:– 13 21 29 to 31 33 35 41 44
47 to 49 52 to 55 57 59 71 72 79 80
82 90 101 07 17 to 22 24 29 to 31 33
37 39 58 68 70 82 96 222 to 26 32
35 to 38 56 64 66 67 69 70 348 50
51 61 63 67 68 71 to 82 87 89 to 91
94 96 to 98 400 01 15 18 to 21 79 91
92 506 16 19 24 64 76 85 613 17
18 38 67 69 75 99 709 26 28 62
to 64 812 17 to 20 27 32 72 907 12
14 15 17 to 19 21 31 33 37 38 40
46 84 1000 02 03 07 08 10 12 to 18
20 22 23 25 27 to 34 40 59 61 to 63
92 93 1105 08 41 48.

## ABHIGNA

I Class:– 840 959

II Class:– 62 to 66 78 147 49 50 53 89
to 92 94 206 08 11 13 15 40 to 42
44 46 77 81 83 85 86 93 95 301
05 07 09 11 15 17 70 84 444 80
538 39 78 610 52 53 55 56 70 to 72
700 to 02 73 to 76 85 92 97 to 99 801 25
41 46 82 to 85 89 90 922 26 60 65
68 71 73 to 75 93 to 96 1064 65 1118 19

III Class:– 4 74 139 to 43 45 46 48 51 54 55 60 to 66 93 207 09 12 14 16 to 20 39 43 45 78 79 82 84 87 to 89 92 94 96 to 300 03 04 10 12 to 14 16 19 83 423 25 to 28 30 33 35 41 81 to 86 540 41 80 98 99 622 to 25 57 to 62 73 74 78 79 729 31 72 78 80 83 86 to 89 91 800 33 34 38 42 45 80 81 86 88 923 to 25 27 54 56 to 58 63 64 70 72 87 88 1036 to 38 67 68 1115 to 17 20 21 24 25 27 29 30 33 34 36.

## VICHAKSHANA

I Class:– 195 335 38 40 853.

II Class:– 67 68 221 322 to 28 31 34 36 37 42 55 to 58 449 59 67 69 to 72 87 to 90 544 45 71 72 75 600 30 81 82 732 802 05 48 to 50 95 976 89 1071

III Class:– 77 78 247 to 52 329 30 32 33 39 41 53 54 445 48 51 54 56 57 60 63 to 66 73 to 75 548 73 74 627 to 29 80 83 804 47 51 52 96 978 1070 73

## SAMARTHA

I Class:– 343

II Class:– 14 344 45 601 84 85 704 05 37 854 56 57

III Class:- 6 602 86 1006

I Part:- 549 50 52 980 to 82 1111 12

II Part:- 476 738 855 58

## KOVIDA

I Class:- Nil

II Class:- Nil

III Class:- Nil

I Part:- 7 555 to 60 692 738 739

II Part:- 7 555 to 60 689 690 692
738 739 864 866 1113 14

III Part:- 7 688 689 690 691 692

IV Part:- 478 689 690 691 692 859 860 861
862 863 865 866

V Part:- 7 478

The following candidates stood first in First Class in the Examinations as shown below :

Parichaya – 1040 Narayanam Umadevi, Vijayanagaram.
Abhigna – 840 S. Jayalakshmi, Madras.
Vichakshana – 338 Vangara Sujatha, Guntur.
Samartha – 343 Kondapati Gnanaprasunambha, Guntur.

CHITTOOR,
4—5—76.

**(K. Srinivasachari)**
PARIKSHAMANTRY.

# राक्षस उत्तरायणपरीक्षासु-March 1975

## उपयुक्तानि केन्द्राणि

(१) अनकापल्ली (२) अनन्तपुरम् (३) अनपर्ति (४) ओन्टिमिट्ट (५) इंजरम् (६) कडपा (७) कन्दुकूरु (८) काञ्चीपुरम् (९) कालडि (१०) काकिनाड-ए (११) काकिनाड-बि (१२) किर्लिपूडि १३ कुम्भकोणम् (१४) कोमरगिरिपट्नम् (१५) कोत्तपालेम् (१६) कोण्डमाचुपल्लि (१७) कोयम्बुतूर् (१८) कोंपेट (१९) गुण्टूरु (२०) गूडूरु (२१) गोबिचेट्टिपालयम् (२२) चट्रायि (२३) चित्तूरु (२४) तञ्जावूरु (२५) तणुकु (२६) तिरुपति (२७) तिण्डिवनम् (२८) तिरुमल (२९) तिरुविडैमरुदूरु (३०) तेनालि (३१) दुम्मगूडेम् (३२) दोम्मरनन्द्याल (३३) द्राक्षारामम् (३४) नडकुदुरु (३५) नेल्लूरु-ए (३६) नेल्लूरु-बि (३७) पालकोण्ड (३८) पाकाला (३९) पिठापुरम् (४०) पेरुङ्गळत्तूरु (४१) पेदरावूरु (४२) पोलूरु (४३) पेद्दापुरम् (४४) बोब्बिलि (४५) भीमवरम् (४६) मदनपल्ली (४७) मद्रास् (४८) मधुरा (४९) मुक्कूरु (५०) मन्नार्गुडि (५१) मन्त्रालयम् (५२) मुक्काभल (५३) रायचूरु (५४) राजमन्ड्रि (५५) विजयवाड (५६) विजयनगरम् (५७) श्रीकाकुलम् (५८) सिकिंदराबाद् (५९) सीतारामपुरम् (६०) सेलम् (६१) हिन्दूपुरम् (६२) हैदराबाद् (६३) मचिलीपट्नम् ।

## राक्षस उत्तरायण परीक्षाफलसूची

(१९७६ मार्च)

| परीक्षा: | उपस्थिता: | उत्तीर्णा: | श्रेणी | | | |
|---|---|---|---|---|---|---|
| | | | प्र.श्रे. | द्वि.श्रे. | तृ.श्रे. | खण्डश: |
| परिचय | 565 | 406 | 84 | 145 | 177 | — |
| अभिज्ञ | 299 | 238 | 2 | 93 | 143 | — |
| विचक्षण | 118 | 101 | 5 | 50 | 46 | — |
| समर्थ | 31 | 28 | 1 | 12 | 4 | 11 |
| कोविद | 23 | 23 | — | — | — | 23 |
| आहत्य | 1081 | 796 | 92 | 300 | 370 | 34 |

संस्कृतभाषाप्रचारिणी सभा,
5—5—76.

की. श्रीनिवासाचार्य:,
परीक्षामन्त्री.

# नल दक्षिणायन - परीक्षाणां सन्नाहकार्यक्रमः

**Programme of September 1976 Examinations.**

विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणीयान्तिमतिथिः 20–7–76

1 रू. विलंबशुल्केन सह आवेदनपत्राणां प्रेषणायान्तिमतिथिः 31-7-76

आवेदनपत्राणि 20 पैसमात्र - पोस्टलचीटिका (Stamps) प्रेषणे विना मूल्यं प्रेष्येरन् ।

31–7–76 परतः प्रेष्यमाणानि
आवेदनपत्राणि सुतरां न स्वीक्रियेरन् ।

समर्थकोविदपरीक्षयोः निर्णीतकेन्द्रेष्वन्यतमः स्वीकर्तव्यः ।

परिचयः रू. 2–00 अभिज्ञः रू. 4–00
विचक्षणः रू. 6–00 समर्थः रू. 8–00 खण्डशः रू. 5–00
कोविदः रू. 12 00 खण्डशः रू. 5–00

विशेषानुमतिशुल्कम् (Exemption Fee) 5–00
विलम्बशुल्कम् (Late Fee) रू. 1–00

परिचयाभिज्ञविचक्षणसमर्थपाठ्यपुस्तकानि सभायां लभ्येरन्। विशेषजिज्ञासायां 20 पैसामात्राः पोस्टलचीटिकाः (Stamps) प्रेषणीयाः ।

प्रधानमन्त्री,
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु (आ. प्र.)

# विज्ञप्तिः

★

अयि ! पाठकमहाशयाः ! संस्कृताभिमानिनः ! उदाराः ।

अस्मत्सभायाः भवनस्य पूर्वो भागः यथाकथञ्चित् श्रीमान की।। शे।। टि. के. तिरुवेङ्कटाचार्यस्य (सभायाः भूतपूर्वप्रधानमन्त्रिणः) अविरलानितरकृषिफलतया निर्मित आस्ते । इदानीन्तु तदुत्तरभागस्य निर्माणावश्यकता अतितरां वर्तते । अद्य तु भवनसंकोचात् भाषाविषयक-कार्यकलापनिर्वहणमतीव कष्टतरं वर्तते । स्थलाभावात् अमूल्याः आंग्लाध्रसंस्कृतग्रन्था बहवः रसिकानां पठितॄणां करकमलान्यनारोहन्तः तत्र तत्र कोणेषु निद्राणस्थिति मनुभवन्तो वर्तन्ते ।

सानुक्रोशमिदं वो विज्ञाप्यते, यत् श्रीमद्भिर्यथोचितं, यथाशक्ति च सं. भ. प्र. सभायाः भवननिर्माणाय धन-साह्यं कृत्वा संस्कृतोन्नतेः कारणताम् भजेरन्निति ।

इत्थम्,

ब. शेषाचार्यः,

प्रधानमन्त्री, सं. भा. प्र. सभा.

चित्तूरु,

१५–५–७६.

# पाणिनेः व्याकरणशास्त्रे स्थानम्

ति. गो. अनन्तसुब्रह्मण्यम्, तिरुपति,
शिरोमणिः, विद्वान्, सङ्गीतभूषणम्, डि.इन्.डीच्.

"ब्राह्ममैशानमैन्द्रञ्च प्राजापत्यं बृहस्पतिम् ।
त्वाष्टुमापिशलं चेति पाणिनीयमथाष्टकम्" ॥

**अन्यश्च —**

"इन्द्रश्चान्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्राः जयन्त्यष्टादिशाब्दिकाः ॥"

पूर्वोक्तयोः श्लोकयोः पाणिनिव्यकाकरणस्य नाम दृश्यते । अतः, व्याकरणशास्त्रं अष्टौ वा नव वा यथा तथा वा भवतु। व्याकरणेषु पाणिनीयव्याकरणमेव मूर्धन्यतया वरीवर्ति ।

### प्रक्रियाक्रमस्य प्रादुर्भावः

पाणिनीयव्याकरणानन्तरं प्रक्रियाक्रमरूपेण व्याकरणानि कातन्त्राणि आगतानि । प्रक्रियाक्रमाध्ययनेन छात्राणां सौकर्यं वर्तते । छात्राः यावत्पर्यन्तं अध्ययनं कुर्वन्ति तावत्पर्यन्तं विषयज्ञानम् । पाणिनीयव्याकरणस्य यदि सम्पूर्णज्ञानं न स्यात् तदा व्याकरणस्य ज्ञानमपि न स्यात् । कुत इति चेत् पाणिनीयव्याकरणस्य प्रक्रियाक्रमाभाव एव कारणम्। उदाहरणरूपेण समासान्तप्रत्ययविधायकसूत्राणि पञ्चमाध्याये वर्तन्ते । समासविधायकसूत्राणि षष्ठाध्याये तृतीयपादे सन्ति। एतादृशरीत्या एकैकेन सह एकैकस्य सम्बन्धः विरलो वर्तते । अत एव

पाणिनीयव्याकरणस्याध्यापनं दुर्लभमभूत् । अनन्तरं पाणिनीय-व्याकरणस्याध्ययनं तस्य प्रक्रियाक्रमाध्ययनञ्च कालशः आगतम् । अष्टाध्यायीक्रममनुसृत्य प्रक्रियाक्रमः आगतः ।

ग्रन्थकर्तुः सरणिमनुसृत्य व्याख्या भवेच्चेत् सा सरणिः, सुलभा । व्युत्क्रमेण चेत् तन्मार्गः अतीव कष्टतमो भवति । व्युत्क्रम-रूपव्याख्यानमेव सिद्धान्तकौमुदीव्याख्यानम् । किञ्च सिद्धान्त-कौमुदीक्रमस्याध्ययनं अलमपरिश्रमेण, अल्पकालेन च लब्धुं शक्यते । किन्तु अष्टाध्यायीक्रमाध्ययनं चिरकालं भवति । सिद्धान्तकौमुदीक्रमाध्ययनेन विषयज्ञानं लब्धुं शक्यते । कुत इति चेत् प्रकरणान्तरेषु तेषां सूत्राणां पठनमेव कारणं भवति ।

अष्टाध्यायीक्रमाध्ययनेन तु सुलभतया सूत्रज्ञानं लब्धुं शक्यते । कथमिति चेत् अष्टाध्यायीपाठस्य सम्पूर्णाध्ययनेन सूत्राणां ज्ञानं लब्धुं शक्यते । अत एव प्रक्रियाक्रम एव श्लाघनीयः । अत एव प्रक्रियाक्रमः पूर्वाचार्यैः स्वीकृतः ।

प्रक्रियाक्रमग्रन्थकर्तारः —

१. रूपावतारः – शङ्कररामः
२. प्रक्रियारत्नाकरः –
३. रूपमाला – विमलसरस्वती
४. प्रक्रियाकौमुदी – रामचन्द्रः

## सिद्धान्तकौमुदी

प्रक्रियाक्रमव्याख्यानेषु सिद्धान्तकौमुदी व्याख्यानं अर्वाचीनकाले प्राथम्यं भजते । इतः पूर्वं रूपावतार, रूपमाला, प्रक्रियाकौमुदी इत्यादिषु प्रक्रियाग्रन्थेषु अष्टाध्यायीसूत्राणां सर्वेषां निवेशः व्याख्यानञ्च न दृश्यते । भट्टोजिदीक्षितकौमुद्यां सर्वेषां सूत्राण

निवेशनं व्याख्यानञ्ज दृश्यते। पूर्वप्रक्रियाग्रन्थेभ्यः कौमुद्याः प्राधान्यं आधुनिककाले वरीवर्ति। भारते पाणिनीयसंपूर्णव्याकरणाध्ययनं कौमुदीपठनेनैव सिद्ध्यति। व्याख्यानस्य लक्षणं —

"पदच्छेदः पादार्थोक्तिः विग्रहो वाक्ययोजना।
पूर्वप्रश्नसमाधानं व्याख्यानं पञ्चलक्षणम्" ॥

अस्य श्लोकस्य आदर्शभूतं कौमुदीव्याख्यानं विलसति। किञ्च अधुना काले सिद्धान्तकौमुदी, लघुशब्देन्दुशेखरः इत्यादिग्रन्थानां प्रचारो अधिकः। अनयोः ग्रन्थयोः प्रचारेण भाष्यपठनं, भाष्यपाठनञ्च लुप्तमभूत्। भाष्यविषयान् तत्र तत्र सम्यक् आलोड्य संग्रहेण कौमुद्यां दीक्षितैः व्याख्यानं कृतम्। कौमुदीपठनेनैव व्याकरणशास्त्रस्य ज्ञानं संपूर्णं लब्धं भवति।

"कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।
कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः" ॥

इति अभियुक्तोक्तिरपि संगच्छते।

भट्टोजिदीक्षितैः प्रथमतः शब्दकौस्तुभ इति ग्रन्थः व्याकरणशास्त्रस्य व्यख्यानरूपेण कृतः। तस्य ग्रन्थस्य विषयान् विमृश्य सिद्धान्तकौमुदी रचिता। अस्मिन्काले पाणिनीयव्याकरणस्य प्रक्रियारूपव्याख्यानग्रन्थः सिद्धान्तकौमुदीग्रन्थ एव। पाणिनेः अष्टाध्यायीग्रन्थस्य सम्यग्ज्ञानार्थं कौमुदी अवश्यं पठनीया इति शम्।

# ★ सुभाषितानि ★

— श्री एन्. रामनाथार्यः

क्षणेन वृद्धिं व्रजतां क्षणात् क्षय मुपेयुषाम् ।
धनानाञ्च घनानाञ्च केन विज्ञायते गतिः ॥ ॥ ६०० ॥

Who can predict the behaviour of riches or the clouds? In an instant they gather and also disperse.

सर्वापकारः सुकृतप्रहारः क्लेशावतारः कुशलापसारः ।
शीलापचारः कुपथाभिसारः पापप्रकारः परदारहारः ॥

Seducing other's wives is a heinous crime; it is a great harm committed and also destroyer of virtues; it leads to worry and unhappiness; it is against good conduct and leads to immorality; it is therefore a great sin.

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयो मैंत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ॥ ६०२ ॥

Marriage and friendship between parties eqally placed with regard to wealth and status prosper; but not between the well to do and the poor.

# गुरुदक्षिणा

कंदाळ वेंकटरामकृष्णमाचार्यः, तिरुपति

[पूर्वानुबन्धः]

कौत्सः-राजन्! किं वक्तव्यम्? पूज्येषु तव भक्तिरधिका कुलोचिता च। तया त्वं पूर्वान् अतिशेषे। सत्पात्रे सर्वस्वदानेन केवलं शरीरेणापि तिष्ठन् शोभसे। यथा देवैः पीतस्य सुधांशोः कलाह्रासो गौरवदायी तथैव तवेदम्। यद्यप्यहं गुरुकर्यार्थमागतः तथापि अन्यस्मादेव यतिष्ये। हे रजन्! स्वस्त्यस्तु। निर्गलिताम्बुगर्भं शरद्घनं चातकोऽपि नार्दति किल। (इति गमनायोद्युक्तः भवति)

रघुः – महानुभाव! न गन्तव्यम्। कियद्वा धन मपेक्षितं भवद्भिः। सविस्तरं श्रोतु मुत्सहे।

कौत्सः-महाराज! समाप्तविद्येन मया गुरुदक्षिणायै गुरवः विज्ञापिताः।

रघुः – अनुगुणमेवैतत् विद्यार्थिनां अध्ययनान्ते।

कौत्सः-तदा प्रथमं गुरवः चिरमस्खलितोपचारां भक्तिमेव तथागणयन्।

रघुः – शिष्यवत्सलानां स्वभाव एव तादृशः।

कौत्सः-ततो मया निर्बन्धः कृतः।

रघुः – तदप्यनूरूपमेव।

कौत्सः-ततो रुष्टा गुरवः विद्यापरिसंख्यया "कोटीश्चतस्रः दशचाहरे"ति समादिशन्। सोऽहं सपर्याविधिभाजनेन भवन्तं प्रभुशब्दशेषं मत्वा उपरोद्धुं नाभ्युत्सहे।

रघुः – हे महाभाग! अर्थार्थी महर्षिः रघोः सकाशात् काममनवाप्य वदान्यान्तरमशिश्रयदिति अपप्रथा माभूत्। भवान् ममाग्नि-गृहे चतुर्थोऽग्निरिव द्वित्राणि दिनानि स्थातुमर्हति ।

कौत्सः-तथैव ।

मन्त्री–कः कोऽत्र भोः? (प्रतीहारी प्रविशति)

प्रतीहारी-आज्ञापयतु देवः ।

रघुः – एतानग्निगृहं प्रापय (कौत्साभिमुखो भूत्वा) महाभाग! एष भवन्त मग्निगृहं नेष्यति ।

कौत्सः-तथा (प्रतीहारी कौत्सश्च निष्क्रान्तौ)

रघुः – (मन्त्रिणोऽभिमुखीभूय) महामात्य! सर्वमपि भवता दृष्टचरमेव हि ।

मन्त्री-सर्वमपि ज्ञातम् ।

रघुः – अधुनास्माकं चतुर्दशकोटयात्मकं धनमावश्यकम् । तत् कथं लभ्यम्?

मन्त्री–महारज! नगरे स्थितं धनं प्रायशः सर्वं कररूपेण गृहीतम् । तावद्धनं राज्ये प्रायशः नास्त्येव । कोशागारमपि शून्यम् ।

रघुः – अस्ति वा यः कश्चन राजा धनवान् यं विजित्यास्मै धनं दास्यामः ।

मन्त्री–महाराज! दिग्विजययात्रायां सर्वैरपि स्वीयसंपदुपहाररूपेण दत्तप्राया । सर्वमपि भवद्भिः स्सर्वस्वदक्षिणेऽर्थिभ्यो दत्तम् । उपहारीकृतं धनं पुन स्त्रीकर्तुमयोग्यमपि ।

रघु: – तर्हि भवतु । कुबेरमेव विजित्यास्य कामं पूरयिष्यामः । जैत्रयात्रायै रथस्सायत्तीक्रियताम् । सविस्तरं ज्ञापनीयोऽयं वृत्तान्तः महर्षिवर्येभ्योऽस्मद्गुरुभ्यो वसिष्ठेभ्यः ।

मन्त्री–यथाज्ञापयति देवः ।

(यवनिका पतति)

इति प्रथमरङ्गः

## अथ द्वितीयरङ्गः

(विष्णुमित्रोनाम वैदिकब्राह्मणः देवदत्तो नाम पौरश्च प्रविशतः)

देवदत्तः-भो विष्णुमित्र! किमिदमुषस्येव कुत्रापि गम्यते?

विष्णुमित्रः-आम्! देवदत्त! ? राजद्वारम् ।

देव – को वा विशेषः?

विष्णु–ह्यः कौत्सनामा वरतन्तुमुनिशिष्यः गुरुदक्षिणायै चतुर्दश-कोटयात्मकं धनमयाचत किल ।

देव – श्रुतं तथा ।

विश्णु–तच्चानल्पं मनुजेतरादप्राप्यं च । अतः कुबेरमेव जित्वा तत्संपादयितुं राजा रथमधिरोक्ष्यति । तस्य प्रस्थाने स्वस्ति-वाचनाय गम्यते ।

देव – मित्र! एकं पृच्छामि । अन्यथा नैव चिन्तयतु भवान् । अयं च रघुः मनुष्यः । अस्य देवैस्सह क्रियमाणा स्पर्धा कथं सफला भविष्यतीति ।

विष्णु– सखे! राजसामान्यस्य तथा । न च सा शङ्का रघुवरे कार्या । वसिष्ठमन्त्रोक्षणजः प्रभाव एव तादृशः ।

देव – किमेवम्? तर्हि गच्छ। अहमप्यागच्छामि। (निष्क्रान्तौ)

— इति शुद्धविष्कम्भः —

(राजा रथे उपविष्टः भवति। ब्राह्मणाः सौप्रस्थानिक स्वस्तिवाचनं कुर्वन्ति। अत्रान्तरे कश्चन सेवकः प्रविशति)

सेवकः-महाराज! कोशागारे कापि ध्वनिः कोशागाररक्षकै राकर्णिता। दैवतै स्सर्वैरपि सर्वमपि कोशागारं वसुपूर्णं दृष्टम्। ततश्च तैर्निश्चितं यद्धीतो कुबेरः सुवर्णवृष्टि मयच्छत्। एतश्च शीघ्रतरं निवेदनीयं भवद्भ्यः इत्यादिष्ट आगतोऽहम्।

(सर्वे–नेपथ्ये) जय रघुमहाराज - जय - दिग्विजयी भव!

रघुः – (रथादुत्थाय) नमोऽस्मत्पुरोहितेभ्यः वेदविद्भ्यश्च। कृतार्थोऽस्मि भवतामाशीर्वचोभिः। (सेवकाभिमुखो भूत्वा) सत्वरं मुनिं कौत्सं कोशागारसमीपमानय। यावदहमपि तत्रागमिष्यामि।

सेवकः-तथेति (निष्क्रान्तः) (यवनिका पतति)

— यवनिका निवर्तनम् —

(मन्त्री राजा च कोशागारसमीपे उपविष्टौ। (कौत्सः प्रविष्टः)

रघुः – महर्षे! सुप्रभातम्! आस्यतामस्मिन्। (कौत्सः उपविशति) भगवतः प्रसादेन संपन्नमावश्यकं धनम्।

मन्त्री–सर्वथा सिद्धसङ्कल्पाः महर्षयः।

कौत्सः-तादृक्प्रभावशाली राजा रघुः।

[ अनुवर्तते ]

# शंकरस्तवकळानिधिः

शङ्करभगवत्पादा –
चार्याणां लोकविनुतचर्याणाम् ।
अद्वैतमतस्थापन –
गुरुवर्याणां नमामि पदयुगळम् ॥ १

वर्षसहस्रात्पूर्वं
केरळदेशस्थकालटिग्रामे ।
प्राप्तजनिं सेवे बुध –
नुतचरितं शङ्करावतारमहम् ॥ २

आर्याम्बायाश्शिवगुरु –
मखिनो द्रविडावनीदिविजवंशे ।
सञ्जातं वन्देऽहं
वैशाखे मासि शुक्लपञ्चम्याम् ॥ ३

प्रागेव षोडशाब्दात्
 गोविन्दसमाख्यसद्गुरोः कृपया ।
प्राप्ताखिलशास्त्रार्थं
 कलये निस्सीमबोधमहिमानम् ॥ ४

गीतानां च दशाना
 मुपनिषदां ब्रह्मसूत्रनिकराणाम् ।
भाष्यकृतं सेवे हृदि
 सुरेश्वरप्रमुखशिष्यबृन्दयुतम् ॥ ५

सौगतमतमत्तद्विप –
 पञ्चास्यं हृदयनिहितपञ्चास्यम् ।
लोकायतिकमताम्बुद –
 झञ्झावातं भजामि गुरुवर्यम् ॥ ६

प्राभाकरभाट्टादिक –
 मतखण्डनकुशलधीयुतं वन्दे ।
सांख्यादिविमततन्त्र –
 प्रालेयव्रातभास्करं नौमि ॥ ७

दुर्वादिगर्वविलसित –
 निर्वापणधूर्वहोद्यदतुलमतिम् ।
निजसिद्धान्तस्थापन
 पटुवाचोयुक्तिवैभवं वन्दे ॥ ८

मण्डनमिश्रसमाह्वय –
वरकर्मब्रह्मवादिनं वादे ।
जित्व तं सन्न्यस्तं
कृतवन्तं तुलितगीष्पतिं नौमि ॥ ९

स्वीकृतपारिव्राज्यः
कुर्वन् पर्यटनमखिलदेशेषु ।
कुमतान्यदूषयद्य
स्तं वन्दे लोकहितकृतं नित्यम् ॥ १०

स्वमतं भुवि विस्तार्य
द्वात्रिंशद्वत्सरे बदर्यां तु ।
अवतारपरिसमाप्ते
रमृतत्व मवाप्तवन्त मह मीडे ॥ ११

नमत गुरुचरणनळिने
भजत सदा देशिकेन्द्रपदयुगळम् ।
पिबताद्वैताख्यसुधां
भवत परानन्दसिन्धुनिमग्नाः ॥ १२

को नाभिलषति भूमा
वमृतत्वापादकामृतं पातुम् ।
अद्वैतमेव तदमृत
मिति कुरुत मतिं सुखानुभवरक्ताः ॥ १३

यतिमूर्धन्याय नमो
मतिनिर्जितविमतदुर्मताय नमः ।
किङ्करविबुधाय नमः
शङ्करगुरुवर्यपदयुगाय नमः । १४

ये कीर्तयन्ति शङ्कर –
भगवत्पादा ननल्पया भक्त्या ।
आत्मविद स्ते क्रमशो
ध्रुवं भवं त्युत्तरन्ति भवजलधिम् ॥ १५

येस्तव मिमं पठन्ति हि
शङ्करगुरुचरणभक्तितो नित्यम् ।
तेऽपि लभेरन् कृपया
तस्य गुरो रुत्तमां पदवीम् ॥ १६

शङ्करस्तवकळानिधिरेष:
चन्द्रशेखरकृपामहनीयः ।
रामकृष्णरचितो विबुधाना
मातनोतु नितरां परितोषम् ॥ १७

# श्रीरामानुजाचार्यः

"अवरः"

[पूर्वानुबन्धः]

शैवानामपि सहानुभूतिर्जाता। मतं यत्किमप्यस्तु, यस्य यत्सम्मतं तस्य तन्मत मस्तुनाम कामम्! अनेन अन्यमतस्थ इति कारणेन, न कोऽपि हिंसनीयः। न कस्मिन्नपि मते द्वेषस्य प्रबोधः प्रचारो वा दृश्यते। "अद्वेष्टा सर्वभूतानां" "मा हिंस्यात्सर्वभूतानि" "अहिंसा परमो धर्मः" इत्यादिक मेवहि मतानां मूलसूत्रं आम्नायते। "श्लोकेनैकेन वक्तव्यं, यदुक्तं ग्रन्थकोटिभिः" इति प्रश्ने प्राप्ते "श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः" इति प्रतिज्ञाय महात्मना केनचित् (नाम न ज्ञायते) किमुक्तम्?

"परोपकारः पुण्याय पापाय परपीडनम्" इत्येव खलु निष्कृष्टः सारांशः। एवं सति मतभेदमात्रेण परपीडनं न कस्यापि मतस्य सम्मतं भवति" इति शैवा अप्यवोचन् परस्परम्।

कुलोत्तुङ्गचोलस्य राज्ये तन्मतविरुद्धं उद्यमं न कोऽपि कर्तुं प्रभवति। अतो नेत्रस्थानाभ्यां स्रवदसृग्धारादिग्धौ कूरेश-महापूर्णौ स्खलत्पदं अन्योन्याश्रयं च पुरो गच्छन्तौ पश्यन्तो जनाः दुःखिता अपि तावाश्वास्य बाधोपशमनं विधातु मस्वतन्त्रा विवशाश्चासन्।

कूरेशः प्रौढे वयसि विद्यमानः, अत एव स नेत्रहानिबाधां सोढुं शक्नोति स्म। परन्तु महापूर्णः वृद्धत्वात् अशक्तत्वाच्च बाधां सोढुं न पारयति स्म। कूरेशे विचिन्त्याचिन्त्य पुरो गच्छति

पृष्ठत स्तमेव भुजमूलेऽवलम्ब्य महापूर्णः अनुजगाम। उभावपि तौ भगवति न्यस्तभारौ श्रीरङ्गाभिमुखं गन्तु मुद्युक्तौ। यद्यपि कूरेशः अध्वगमनसमर्थः; तथाऽपि दृष्टिलोपात् बाधाविह्वलत्वाच्च मार्गं मन्विष्य गमने मन्दगतिरासीत्। महापूर्ण स्तु महताऽऽयासेन, बाधा मनुभवन् अनुगच्छन् आसीत्। उभावपि महात्मानौ आत्मनिग्रहवन्तौ; अत स्तौ बाधातप्तहृदयावपि शनैः शनैः गच्छतः स्म।

महापूर्णः–"कूरेश! श्रीरङ्ग मितःपरं कियद्दूरं स्यात्" इत्यपृच्छत्।

कूरेशः-"न वक्तुं शक्यते महात्मन्! किञ्च कुत्र वा अस्माभिः स्थीयते इत्यपि न ज्ञायते" इत्याह।

महा–रामानुजः कुत्र वा कथं वा स्यात्?

कूरे–सुरक्षित एव स्यादिति मन्ये।

महा–कथं वक्तुं शक्यम्? अत्रान्तरे राजभटैः श्रीरङ्गं सर्वत्र सर्वथा विचितं स्यात्।

कूरे–राजभटानां श्रीरङ्गगमनात् पूर्वमेव स महान् श्रीरङ्गं परित्यज्य सुदूरं गतस्यादिति मन्ये।

महा–मां तु महान् सन्देहो बाधते।

कूरे–मदीयं पुन रन्तःकरणं सुधीरं निश्शङ्कं च मां निश्चिन्तयति; न जाने किं कारणमिति। प्रपञ्चे न कोऽपि तं महात्मानं धर्षयितुं शक्नोति इति मे प्रतिभाति।

महा–सत्या वाच स्ते शश्वद्भवन्तु; यदि रामानुजः सजीव स्तर्हि वैष्णवं पुनरुज्जीविष्यति।

एवं संलपन्तौ तौ मार्गे पदे पदे स्खलन्तौ पुरोगतौ। नेत्रबाधया पीडितावपि भगवन्तं मनसा ध्यायन्तौ तौ गच्छतः स्म। मध्येमार्गं दयालुभि र्दत्तं भुक्त्वा पीत्वा ग्रामाद्ग्रामं गच्छन्तौ भिक्षान्नेन जीवधारणं कुर्वन्तौ श्रीरङ्ग मभिगन्तु मुद्युक्तौ। कतिपयदिवसैः एवं कृते प्रयाणे, एकदा मार्गमध्ये कस्य चिद्वृक्षस्य मूलप्रदेशे ताभ्या मुपविष्टम्।

महा – "कूरेश!" इत्यपृच्छत्।

कूरे – एषोऽस्मि भोः! आज्ञप्यताम्।

महा – किमावां श्रीरङ्गं गमिष्यावः?

कूरे – भगवत्कृपयाऽवश्यम्।

महा – किं पुनः श्रीरामानुजसन्निधिं प्राप्स्यावः?

कूरे – श्रीरङ्गगमने सिद्धे नूनं रामानुजदर्शनं यदा कदाचि-द्भविष्यति।

महा – मम तु विश्वासो नाऽस्ति; दिने दिने मेऽङ्गानि सीदन्ति।

कूरे – सधैर्यं स्थीयतां तत्रभवता महात्मन्! कथञ्चिद् गमिष्यावः श्रीरङ्गम्।

एवं ताभ्यां श्रीरंगमार्गः महता प्रयासेन दिने दिने शनैः शनैः व्यतीयमान आसीत्। कस्मिंश्चिद्दिने क्वचिद्विश्रान्तयोः तयोः प्रभातम्; मध्याह्नमप्युपगतं; सायमासन्नम्। निराहारयोः तयो रन्धपान्थयो स्तदा द्वित्राणि दिनानि अतीतानि। न केवलं महापूर्णः अपितु कूरेशोऽपि मार्गायास खिन्न आसीत्। तथापि स महापूर्णं परिचर्ययाऽपगतायासं कुर्वन्नासीत्। रात्रौ यामा द्यामोऽप-गच्छति स्म। महापूर्णः अतीव व्यथमानः प्राह — "कूरेश! इतः परं नाहं जीविष्यामि; मा मुपवेशय तावत्" इति।

कूरेशः महापूर्णं सम्यगुपवेश्य आलम्बनविधया स्वय मपि तस्यान्तिक मुपविष्टः। हा! बत अन्धस्य आलम्बन मन्धोऽभवत्! कूरेशः चिन्ताक्रान्त आसीत्। महापूर्णः नूनमेव निश्चेष्टः कम्पमानशरीरः विसंज्ञश्च आसीत्। कूरेशः महापूर्णं चेतयामास। संज्ञां लब्ध्वा महापूर्णः कूरेश मवदत् — "यदि रामानुजो दृश्येत तर्हि मदीया माशिषं तस्मै ब्रूहि" इति। एतदपि वाक्यं महताऽयासेन स्खलत्पद मभाषि। कूरेशः महापूर्णं सान्त्वयन्नाह — "महात्मन् किमित्येवं अधीरं कथ्यते" इति।

महापूर्णः – "नाहं जीविष्यामि; जीवनाशाऽपि नास्ति"। एवं वदन् महापूर्णः तूष्णींभूतः। बहुशः स भगवन्तं ध्यायन् वा स्यात् अथ तस्मिन् परस्मिन् पुरुषे विलीनो वा स्यात्। कूरेश स्तं स्पृशन् चालयन् परीक्षितु मारेभे। महापूर्णः इहलोकं विसृज्य परलोकं गतः। तस्य शरीरं निश्चेष्ट मासीत्। महापूर्णस्य जीवनयात्रा समाप्तेति यदा कूरेशोऽज्ञासीत् तदा स भृशं दुःखितः। तस्मिन्नरण्ये तस्य रोदनं को वा शृणुयात्? अन्ते स महापूर्णं विहाय द्वित्राणि पदानि पुरो जगाम।

महानाचार्यः एकः अस्तं गतः महापूर्णस्य अस्तंगमनेन वैष्णवस्य महती क्षति रुत्पन्ना। महापूर्णस्य दहनसंस्कारं कर्तुमप्यशक्तः कूरेशः, अन्धत्वात्। कथञ्चित् प्रेतस्य शवं तत्रैव अरण्ये परित्यज्य श्रीरङ्गाभिमुखः प्रस्थितः क्व नु महापूर्णः। क्व वा कुलोत्तुंगचोलः! महापूर्णस्य अन्तिमसमयः महत्यरण्ये विजनप्रदेशे निस्सहायदशायां समाप्तः। सर्वमिदं भगवतः कैतवं लीलायितम्।

[ अनुवर्तते ]

सुकविता यद्यस्ति राज्येन किम् ?

## कविताविनोदः—

(६) समस्या ।

“पद्मेऽळिरिव दृश्यते” ॥

★

उत्सुकैरेतां समस्यां सचमत्कारं पूरयित्वा एतन्मासान्तात् पूर्वमेव अधोविद्यमानचीटिकायां स्वसङ्केतादि यथासूचितं सविरळं विलिख्य, साकं प्रेषणीया । प्रेषितेषु रुचिरतया विद्यमानाः श्लोकाः आगामिन्यां गैर्वाण्यां प्रकटीकरिष्यन्ते ।

कविताविनोदाय

नाम –

सङ्केतः –

नगरं / ग्रामः

पत्रालयः –

मण्डलम् –

प्रान्तः –

---

सम्पादकः, “गैर्वाणी” संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ. प्र.) इति सङ्केताय प्रेषयन्तु ।

Please mention your membership Number for easy correspondence.

*R. N. 1845/60.* *Postal C. T. R. 11.*
आन्ध्रप्रदेशसर्वकारेणानुमोदिता. R. C. No. 27-A 3/65 Dated 14-7-'65.
Licensed to Post without Prepayment. LICENCE No.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००

## प्रहेलिका

★

ब्राह्मणस्य महत्पापं सन्ध्यावन्दनकर्मभिः ।
अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ।।

ब्राह्मण = हे ब्राह्मण (त्वं) स्य। स्य = छिन्धि।
स्य is आज्ञार्थ द्वि पु ए व of the धातु = सो (स्यति)

Published by Sri N. Ramanatha Aiyer B. A;B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan (in-charge)
at Vijaya Press. Chittoor (A. P.) C. 1500.